न चेति। एतेषां प्रयोगाणां भेदे च प्रमाणं वक्ष्यमाणतत्तत्कालविधित एवावसेयम्। तत्र सर्वेषां प्रयोगाणां दर्शपौर्णमासोत्तरकर्त्तव्यत्वमुक्तं, "दर्शपौर्णमासाभ्यामिष्ट्वा" इत्यनेन।

अधुना सांवत्सरिकादिप्रयोगेषु कालविशेषो विविच्यते।

तत्र सांवत्सरिकप्रयोगे ऋतुयाजिकल्पे वैश्वदेवादिकाल उक्त आपस्तम्बेन।

वसन्ते वैश्वदेवेन यजते प्रावृषि वरुणप्रघासैः शरदि साकमेधैरिति विज्ञायते।

अत्र त्रिषु पर्वसु नियतः काल उक्तः। शुनासीरीये तु ऋतुयाजिसंख्यानुरोधाच्छिशिर एव ग्राह्य इति प्रतिभाति। अत्रापि पक्षे शुक्लपक्षः अपेक्षित एव। "उदगयन आपूर्यमाणपक्षे समस्तानि वैकल्पिकेषु अनेकेषु कालेषु सत्स्वपि" इत्यनेन भारद्वाजवचनेनोक्तस्य तस्याबाधेनैवोपपत्तौ बाधकल्पनायोगात्। चातुर्मास्ययाजिकल्पे तथा यावज्जीवप्रयोगेऽपि काल उक्तेनैव यश्चतुर्षु चतुर्षु मासेषु यजते स चातुर्मास्ययाजी।

तत्रापि नियममाह—फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजेत। ततश्चतुर्षु मासेषु आषाढ्यां वा श्रावण्यां वरुणप्रघासैर्यजेत। ततश्चतुर्षु मासेषु पूर्वस्मिन् पर्वण्युपक्रम्य द्व्यहं साकमेधैर्यजेत। ततो द्व्यहे त्र्यहे चतुरहेऽर्द्धमासे मासि चतुर्षु वा मासेषु शुनासीरीयैरिति।

अत्र यदा फाल्गुन्यामुपक्रमस्तदाषाढ्यामित्यादि, यदा चैत्र्यां तदा श्रावण्यामिति। अस्य पक्षस्य ऋतुयाजिपक्षादयमेव भेदो यदृतुयाजिपक्षे वसन्तान्ते वैश्वदेवेष्टिः प्रावृडाद्यपर्वणि वरुणप्रघासानुष्ठानमपि सम्भवति। चातुर्मास्ययाजिपक्षे चतुर्षु चतुर्षु च मासेष्विति नियम इति। द्वादशाहकल्पं बौधायनभारद्वाजावाहतुः।

तत्र भारद्वाजः—द्वादशाहानि वक्ष्यमाणः प्रतिपदि वैश्वानरपार्जन्याभ्यां द्वितीये वैश्वदेवेन तृतीये चतुर्थे वोपरम्य पञ्चमे वरुणप्रघासैः षष्ठे सप्तमे वोपरम्याष्टमे नवमे वा साकमेधैर्दशमे एकादशे वोपरम्य द्वादशे शुनासीरीयया, त्रयोदशे पशुरिति संवत्सरप्रतिमा वै द्वादश रात्रयः संवत्सरमेव यजेतेति विज्ञायते।

त्रयोदशे पशुरिति यदि पशुना समासिस्तत्पक्षे बोध्यम्। अत्र द्वितीयादिपदानि द्वितियादितिथिपराणि प्रतिपदीति उपक्रमात् स्पष्टं चोक्तं बौधायनेन—

द्वादशाहेऽपि चातुर्मास्यैर्यजताथ प्रथमायां वैश्वदेवेनेष्ट्वा चतुर्थ्यां वरुणप्रघासैरष्टम्यां नवम्यां च साकमेधैः द्वादश्यां शुनासीरीयैः पुरुषो यजेतेति विज्ञायत इति।

कालान्तरमप्युक्तं बौधायनेन—

नक्षत्रे प्रयोग इत्येक आहुरुदगयन आपूर्यमाणपक्षे पुण्याहे प्रयुञ्जीतेति।

अत्र पक्षे आपूर्यमाणस्य पक्षस्य पुण्यनक्षत्रे उपक्रमः। नक्षत्रे प्रयोग इत्येतस्य विशेषणमुदगयनत्वादीति तद्भाष्यकृतः। यावज्जीविकप्रयोगपक्षे आरम्भस्तु चातुर्मास्ययाजिकल्पेनैव। द्वितीयसंवत्सरे परं विशेष उक्तो बौधायनेन-

कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो भवतीति फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां शुनासीरीयपुरुषो यजेताथ वैश्वदेवायोपवसेत् वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं तत्र कुर्यादिति प्रतिकृष्यैतस्य पक्षस्य शुनासीरीयपुरुषो यजेतैषामेकेन यजेताथ वैश्वदेवायोपवसेत् वैश्वदेवेनेष्ट्वा पौर्णमासवैमृधाभ्यां यजेतेति। अथो एतद्बौधायनस्य पक्षं वेदयन्ते यावज्जीविकान्येव चातुर्मास्यानि स्युरिति।

अनुप्रयोगो=द्वितीयः प्रयोगः। अत्र यदा फाल्गुन्यां पूर्वसंवत्सरे उपक्रमस्तदा फाल्गुन्यां यदा चैत्र्यामुपक्रमस्तत्र चैत्र्यामिति। अथ चेदिष्ट्येति यदि प्रयोगसमाप्त्यर्थं इष्ट्यादि क्रियते तदायं क्रमः। चेदित्युक्त्या यावज्जीवप्रयोगसमाप्त्यर्थैकत्वात्पश्वादीनां पाक्षिकत्वमिति। अथो एतद्बौधायनस्येत्याद्युक्त्या च यावज्जीविकप्रयोगोऽपि पाक्षिको बोध्यः। कालान्तरमपि बौधायन आह—

यथाप्रयोगमित्यौपमन्यव इति।

यथाप्रयोगमिति यावता कालेन प्रयोगसमाप्तिर्भवति तावति काले सन्ततं पूर्वाह्णादौ कुर्यादिति। अत्र पक्षे उदगयनपुण्यनक्षत्र एवोपक्रम इति। एतद्रुद्रदत्तादयो न मन्यन्ते। न हि यथाप्रयोगमित्यनेन चातुर्मास्यकालविधानं किन्तु ब्रह्मचर्यकालस्य नियमः प्रयोगादिनमित्येव व्रतचर्येति। एतच्च स्पष्टमुपक्रमानुसारादेवावगम्यते। तथा च सूत्रं-

यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तरामिथुनानि प्रथमे त्वेव संवत्सरे व्रतं चरेदित्यत्रोहस्माह शालाकिः सांवत्सरिकान्येव चातुर्मास्यानि ब्रह्मचर्यवन्तीति। यथाप्रयोगमित्यौपमन्यव इति। अस्यार्थः। बौधायनमते यावज्जीविकान्येव चातुर्मास्यानि कर्तव्यानि अन्तरिमिथुनवन्ति, प्रथमसंवत्सरस्यैव व्रतचर्येति च। शालिकिमते तु सांवत्सरिकेष्वेवाबं नियमो न यावज्जीविकेषु। उपमन्युमते तु प्रयोगदिने एव व्रतचर्येति।

अपरे तु मास्तु यथाप्रयोगमित्यतः सन्ततकरणं तथापि "उदगयन आपूर्यमाणपक्षे समस्तानि" इति भारद्वाजवचनात्समस्तानां संलग्नानां प्रयोग इति। ऐहिकान्यपि चातुर्मास्यान्युक्तानि शाङ्ख्यायनेन।

अथ सोमकालः।

तत्र श्रुतिः—वसन्ते वसन्ते ज्योतिषा यजेतेति।

याज्ञवल्क्योऽपि प्रतिसंवत्सरं सोम इति।

अयमपि दर्शपौर्णमासोत्तरं कर्त्तव्य इत्युक्तं "दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति वचनात्। अयमुत्सर्गः। सोमाधाने दर्शपौर्णमासेभ्यः पूर्वमपि तस्य करणात्।आश्वलायनेनापि "प्रागपि सोमेनैकेन" इत्यनेन दर्शपौर्णमासेभ्यः पूर्वमपि सोमकर्त्तव्यताकथनाच्च। एतच्च वसन्तेऽपि पर्वणि कार्यं यदिष्ट्येतिवचनात्। कालान्तरमप्याह बौधायनः—

आमावास्येन हविषेष्ट्वा नक्षत्रे वेति।

अस्यार्थः पशुकालनिरूपणे प्रतिपादितः।

इति सोमकालः।

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे<br>
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्भक्तचन्द्रोदये ॥<br>
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते<br>
ग्रन्थेऽस्मिन्समयप्रकाशनपरः पूर्त्तिं प्रकाशोऽगमत् ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-श्रीमन्महाराजमधुकरसाहसूनुचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर श्रीवीरसिंहदेवोद्योजित-श्रीहंसपण्डितात्मजपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु-श्रीमन्मित्रमिश्रकृते

वीरमित्रोदयाभिधनिबन्धे समयप्रकाशः समाप्तः।

शुभं भूयात्।